# लक्ष्मीकान्त शिक्षा

रक्षा वैदिकवर्णानां शिक्षा दुर्मतिरक्षसाम्
लक्ष्मीं दद्याच्चतुःश्लोकी लक्ष्मीकान्तस्य भूतिवत्

अच्पूर्वं हलि हल्द्विरुक्तमपि च स्पर्शो लवोर्ध्वस्वराद्
ऊर्ध्वाधाद् धलि वाचि वा हलपि वानुस्वारयुक्तादिमौ
द्वावन्योन्यसहायतोन्तगनङौ ह्रस्वात् परावच्परौ
द्वेद्वेस्तोऽपि च पूर्वमागममितस्तुर्यद्वितीयौहलौ १

भूते धाम च पाथ एष परमांत्यांत्यग्रगाः पूर्वगाः
किं चोर्ध्वा उपसर्गतश्छखिभुजा लक्ष्यात् क्वचित् पूर्वगाः
तन्मध्ये प्रथमागमश्च सदृशस्पर्शेऽप्यघोषोष्मणाम्
ऊर्ध्वाधः प्रथमो भवेत् सषशतो नान्तो द्वितीयं न वा २

नोष्मा तु प्रथमस्वरात् प्रथमतो नानुत्तमे हल्परे
वर्गेनुत्तम उत्तमेन न विसर्गो लो हशस्पर्शगः
लोपः स्पर्शपरश्च नश्च यवहात् पूर्वोऽन्तगो न द्विधा
मः पूर्वोऽनुनासिकं च यवलस्पर्शात् सवर्णं भजेत् ३

ङोनन्तादधयोः क्रमेण परतस्स्यातां कगावागमौ
ङात् कस्याट्टनतस्तु तश्च सषयोः स्पर्शादनुष्मात्मनः
ऊर्ध्वस्थेष्वपि चोत्तमेषु च यमानाहुस्तथानुत्तमान्
नासिक्यं नणमैर्युताद्यजुषि हाङ्गस्याच्छपूर्वस्य कः ४

वर्णक्रमचतुश्लोकीं वर्णक्रमविचक्षणाः
पाठतश्चार्थतो ज्ञात्वा विजयध्वं दिशो दश